# ॥ गोपिकागीतं ॥

**गोप्य ऊचुः**

जयति तेऽधिकं जन्मना व्रजः
श्रयत इंदिरा शश्वदत्र हि ।
दयित दृश्यतां दिक्षु तावकाः
स्त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥

शरदुदाशये साधुजातसत्
सरसिजोदरश्रीमुषा दृशा ।
सुरतनाथ तेऽशुल्कदासिका
वरद निघ्नतो नेह किं वधः ॥ २ ॥

विषजलाप्ययात् व्यालराक्षसात्
वर्षमारुतात् वैद्युतानलात् ।
वृषमयात्मजात् विश्वतो भयात्
ऋषभ ते वयं रक्षिता मुहुः ॥ ३ ॥

न खलु गोपीकानंदनो भवान्
अखिलदेहिनां अंतरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये सख
उदेयिवान् सात्वतां कुले ॥ ४ ॥

विरचिताभयं वृष्णिधूर्य ते
चरणमीयुषां संसृतेर्भयात् ।
करसरोरुहं कांत कामदं
शिरसि धेहि नः श्रीकरग्रहं ॥ ५ ॥

व्रजजनार्तिहंवीर योषितां
निजजनस्मय ध्वंसनस्मित ।
भज सखे भवत्किंकरीः स्म नो
जलरुहाननं चारु दर्शय ॥ ६ ॥

प्रणतदेहिनां पापकर्षणं
तृणचरानुगं श्रीनिकेतनं ।
फणिफणार्पितं ते पदांबुजं
कृणु कुचेषु नः कृंधि हृच्छयं ॥ ७ ॥

मधुरया गिरा वल्गुवाक्यया
बुधमनोज्ञया पुष्करेक्षण ।
विधिकरीरिमा वीर मुह्यतीः
अधरसीधुनाऽऽप्याययस्व नः ॥ ८ ॥

तव कथामृतं तप्तजीवनं
कविभिरीडितं कल्मषापहं ।
श्रवणमंगलं श्रीमदाततं
भुवि गृणंति ये भूरिदा जनाः ॥ ९ ॥

प्रहसितं प्रिय प्रेम वीक्षणं
विहरणं च ते ध्यानमंगलं ।
रहसि संविदो या हृदि स्पृशः
कुहक नो मनः क्षोभयंति हि ॥ १० ॥

चलसि यद्व्रजात् चारयन् पशून्
नलिनसुंदरं नाथ ते पदं ।
शिलतृणांकुरैः सीदतीति नः

कलिलतां मनः कांत गच्छति ॥ ११ ॥

दिनपरिक्षये नीलकुंतलै
वनरुहाननं बिभ्रदावृतं ।
घनरजस्वलं दर्शयन्मुहुः
मनसि नः स्मरं वीर यच्छसि ॥१२ ॥

प्रणतकामदं पद्मजार्चितं
धरणिमंडनं ध्येयमापदि ।
चरणपंकजं शंतमं च ते
रमण नः स्तनेष्वर्पयाधिहन् ॥ १३ ॥

सुरतवर्धनं शोकनाशनं
स्वरितवेणुना सुष्ठु चुंबितं ।
इतररागविस्मारणं नृणां
वितर वीर नस्तेऽधरामृतं ॥ १४ ॥

अटति यद्भवानह्नि काननं
त्रुटि युगायते त्वामपश्यतां ।
कुटिलकुंतलं श्रीमुखं च ते
जड उदीक्षतां पक्ष्मकृद्दृशां ॥ १५ ॥

पतिसुतान्वय भ्रातृबांधवान्
अतिविलंघ्य तेऽन्त्यच्युतागताः ।
गतिविदस्तवोद्गीतमोहिताः
कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥

रहसि संविदं हृच्छयोदयं
प्रहसिताननं प्रेमवीक्षणं ।
बृहदुरः श्रियो वीक्ष्य धाम ते
मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥

व्रजवनौकसां व्यक्तिरंग ते
वृजिनहंत्र्यलं विश्वमंगलं ।
त्यज मनाक् च नस्त्वत्स्पृहात्मनां
स्वजनहृद्रुजां यन्निषूदनं ॥ १८ ॥

यत्ते सुजातचरणांबुरुहं स्तनेषु
भीताः शनैः प्रिय दधीमहि कर्कशेषु ।
तेनाटवीमटसि तद्व्यथते न किं स्वित्
कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥ १९ ॥

॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे पूर्वार्धे गोपिकागीतं नाम एकत्रिंशोऽध्यायः ॥